# निर्वाणोपनिषत्

(ऋग्वेदीय संन्यासोपनिषत्)

निर्वाणोपनिषद्वेद्यं निर्वाणानन्दतुन्दिलम् ।
त्रैपदानन्दसाम्राज्यं स्वमात्रमिति चिन्तयेत् ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता । मनो मे वाचि प्रतिष्ठितम् ।
आविरावीर्म एधि । वेदस्य मा आणीस्थः ।
श्रुतं मे मा प्रहासीः । अनेनाधीतेनाहोरात्रान्सन्दधामि ।
ऋतं वदिष्यामि । सत्यं वदिष्यामि ।
तन्मामवतु । तद्वक्तारमवतु ।
अवतु मामवतु वक्तारम् ।
ॐ शान्तिः  शान्तिः  शान्तिः ॥

अथ निर्वाणोपनिषदं व्याख्यास्यामः ।
परमहंसः सोऽहम् । परिव्राजकाः पश्चिमलिङ्गाः ।
मन्मथ क्षेत्रपालाः । गगनसिद्धान्तः अमृतकल्लोलनदी ।
अक्षयं निरञ्जनम् । निःसंशय ऋषिः ।
निर्वाणोदेवता । निष्कुलप्रवृत्तिः । निष्केवलज्ञानम् ।
ऊर्ध्वाम्नायः । निरालम्ब पीठः । संयोगदीक्षा ।
वियोगोपदेशः । दीक्षासन्तोषपानं च ।
द्वादशावदित्यावलोकनम् । विवेकरक्षा ।
करुणैव केलिः । आनन्दमाला ।
एकान्तगुहायां मुक्तासनसुखगोष्टी । अकल्पितभिक्षाशी ।
हंसाचारः ।सर्वभूतान्तर्वर्ती हंस इति प्रतिपादनम् ।
धैर्यकन्था । उदासीन कौपीनम् । विचारदण्डः ।
ब्रह्मावलोकयोगपट्टः ।श्रियां पादुका । परेच्छाचरणम् ।
कुण्डलिनीबन्धः । परापवादमुक्तो जीवन्मुक्तः ।
शिवयोगनिद्रा च । खेचरीमुद्रा च । परमानन्दी ।
निर्गतगुणत्रयम् । विवेकलभ्यं मनोवागगोचरम् ।
अनित्यं जगद्यज्जनितं स्वप्नजगदभ्रगजादितुल्यम् ।
तथा देहादिसङ्घातं मोहगुणजालकलितं तद्रज्जुसर्पवत्कल्पितम् ।
विष्णुविद्यादिशताभिधानलक्ष्यम् ।
अङ्कुशो मार्गः । शून्यं न सङ्केतः ।
परमेश्वरसत्ता । सत्यसिद्धयोगो मठः ।
अमरपदं तत्स्वरूपम् ।
आदिब्रह्मस्वसंवित् । अजपा गायत्री । विकारदण्डो ध्येयः ।
मनोनिरोधिनी कन्था । योगेन सदानन्दस्वरूपदर्शनम् ।

आनन्द भिक्षाशी । महाश्मशानेऽप्यानन्दवने वासः ।
एकान्तस्थानम् । आनन्दमठम् । उन्मन्यवस्था ।
शारदा चेष्टा । उन्मनी गतिः । निर्मलगात्रम् ।
निरालम्बपीठम् । अमृतकल्लोलानन्दक्रिया ।
पाण्डरगगनम् । महासिद्धान्तः ।
शमदमादिदिव्यशक्त्याचरणे क्षेत्रपात्रपटुता ।
परावरसंयोगः । तारकोपदेशाः । अद्वैतसदानन्दो देवता ।
नियमः स्वातरिन्द्रियनिग्रहः ।
भयमोहशोकक्रोधत्यागस्त्यागः । अनियामकत्वनिर्मलशक्तिः ।
स्वप्रकाशब्रह्मतत्त्वे शिवशक्तिसम्पुटित प्रपञ्चच्छेदनम् ।
तथा पत्राक्षाक्षिकमण्डलुः ।
भवाभावदहनम् । बिभ्रत्याकाशाधारम् ।
शिवं तुरीयं यज्ञोपवीतम् । तन्मया शिखा ।
चिन्मयं चोत्सृष्टिदण्डम् । सन्तताक्षिकमण्डलुम् ।
कर्मनिर्मूलनं कन्था । मायाममताहङ्कारदहनम् ।
स्मशाने अनाहताङ्गी । निस्त्रैगुण्यस्वरूपानुसन्धानं समयम् ।
भ्रान्तिहरणम् । कामादिवृत्तिदहनम् । काठिन्यदृढकौपीनम् ।
चीराजिनवासः । अनाहतमन्त्रः । अक्रिययैव जुष्टम् ।
स्वेच्छाचारस्वस्वभावो मोक्षः परं ब्रह्म ।
प्लववदाचरणम् । ब्रह्मचर्यशान्तिसंग्रहणम् ।
ब्रह्मचर्याश्रमेऽधीत्य ससर्वसंविन्न्यासं संन्यासम् ।
अन्ते ब्रह्माखण्डाकारम् । नित्यं सर्वसन्देहनाशनम् ।
एतन्निर्वाणदर्शनम् ।
शिष्यं पुत्रं विना न देयमित्युपनिषत् ।
ॐ वाङ्मे मनसीति शान्तिः ॥

इति निर्वाणोपनिषत् समाप्ता ।